# चाणक्य श्लोकाः।

श्रीमत्पण्डितराजचाणक्यविरचितः।

श्रीभुवनचन्द्र वसाकेन संस्कृतः

प्रकाशितञ्च।

( कलिकातां, निमतला घाट ष्ट्रीट ८

संख्यक भवन हइते प्रकाशित।)

कलिकातानगरे

निमतला घाट ष्ट्रीट ८ संख्यक भवने

श्रीयुक्तवाबुभुवनचन्द्र वसाक संस्थापित

संवादज्ञानरत्नाकराख्ययन्त्रे

तद्द्वारैव मुद्रितः।

१८८५

# चाणक्य श्लोकः ।

---

श्रीमत्पण्डितराजचाणक्यविरचितः ।

श्रीभुवनचन्द्र वसाकेन संस्कृतः

प्रकाशितञ्च ।

( कलिकाता, निमतला घाट ष्ट्रीट ८

संख्यक भवन हइते प्रकाशित । )

---

कलिकातानगरे

निमतला घाट ष्ट्रीट ८ संख्यक भवने

श्रीयुक्तबाबुभुवनचन्द्र वसाक संस्थापित

संवादज्ञानरत्नाकराख्ययन्त्रे

तद्द्वारैव मुद्रितः ।

१८८५

# चाणक्य श्लोकः ।

नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्व्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥
मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः ॥
विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥ १ ॥
पण्डिते च गुणाःसर्व्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञएको विशिष्यते ॥ २ ॥
मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।
आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः ॥ ३ ॥
किं कुलेन विशालेन गुणहीनन्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥ ४ ॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीनो न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ५ ॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्व्वस्य भूषणम् ॥ ६ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥ ७ ॥

वरमेको गुणीपुत्रो न च मूर्ख शतैरपि ।
एकचन्द्रस्तमो हन्ति न च तारागणैरपि ॥ ८ ॥
लालयेत् पञ्चवर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्त्रं मित्रवदाचरेत् ॥ ६ ॥
लालने बहवोदोषास्ताडने बहवो गुणाः ।
तस्मात्पुत्त्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥ १० ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्व्वं सुपुत्त्रेण कुलं यथा ॥ ११ ॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दहते तद्वनं सर्व्वं कुपुत्त्रेण कुलं यथा ॥ १२ ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत्किञ्चिन्न भाषते ॥१३ ॥
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १४ ॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रु विग्रहे ।
राजद्वारे श्मशानेच यस्तिष्ठति स बान्धवः ॥ १५ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्ज्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १६ ॥
सकृद् दुष्टञ्च मित्रं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १७ ॥
न विश्वासेदविश्वस्तं मित्रञ्चापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्व्वदोषं प्रकाशयेत् ॥ १८ ॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रञ्चापत्काले च भार्य्याञ्च विभवक्षये ॥ १९ ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत्।
पादलग्नकरस्थेन कण्टकेनैव कण्टकम्॥ २०॥
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः।
कारणेन हि जानाति मित्राणि च रिपुंस्तथा॥ २१॥
दुर्जनः प्रियवादी च नैव विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम्॥ २२॥
दुर्जनः परिहर्त्तव्यो विद्ययालङ्कृतोपि सः।
मणिना भूषितः सर्पः किमसौ न भयङ्करः॥ २३॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः।
मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते॥ २४॥
नदीनाञ्च नखीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्य स्त्रीषु राजकुलेषु च॥ २५॥
हस्तिहस्तसहस्रेण शतहस्तेन वाजिनः।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः॥ २६॥
आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ २७॥
परदारं परद्रव्यं परीवादं परस्य च।
परिहासं गुरोः स्थाने चापल्यञ्च विवर्जयेत्॥२८॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीन्त्यजेत्॥ २९॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
नासमीक्ष्य परं स्थानं पूर्व्वमायतनं त्यजेत्॥ ३०॥
लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्म्मणा।
मूर्खं छन्दोनुवृत्तेन तथा सत्येन पण्डितम्॥ ३१॥

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनाञ्चापमानञ्च मतिमान्न प्रकाशयेत् ॥ ३२ ॥
धनधान्य प्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारेच त्यक्तलज्जः सदा भवेत् ॥ ३३ ॥
धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चम ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ ३४ ॥
यस्मिन्देशे न सम्मानं न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित्तं देशं परिवर्जयेत् ॥ ३५ ॥
मनसा चिन्तितं कर्म्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्य्यस्य यतः सिद्धिर्न जायते ॥ ३६ ॥
कुदेशञ्च कुवृत्तिञ्च कुभार्य्यां कुनदीं तथा ।
कुद्रव्यञ्च कुभोज्यञ्च वर्ज्जयेच्च विचक्षणः ॥ ३७ ॥
ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्मात् शेषञ्च कारयेत् ॥ ३८ ॥
चिन्ताज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वराः स्त्रीणामश्वानां मैथुनं ज्वरः ॥ ३९ ॥
अस्ति पुत्त्रो वशे यस्य भृत्योभार्य्या तथैव च ।
अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥ ४० ॥
दुष्टाभार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पेच गृहे वासो मृत्युरेव न संशयः ॥ ४१ ॥
माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ४२ ॥
ऋणकर्त्ता पिता शत्रु र्माता शत्रु र्व्यभिचारिणी ।
भार्य्यारूपवती शत्रुः पुत्रः शत्रुः कुपण्डितः ॥ ४३ ॥

कोकिलानां स्वररूपं नारीरूपं पतिव्रता ।
विद्यारूपं कुरूपाणां क्षमारूपं तपस्विनाम् ॥ ४४ ॥
अविद्यजीवनं शून्यं दिक् शून्या च बान्धवाः ।
पुत्रहीनं गृहं शून्यं सर्व्वशून्या दरिद्रता ॥ ४५ ॥
अदाता वंशदोषेण कर्म्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ४६ ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतोगुरुः ॥ ४७ ॥
अति दर्पे हता लङ्का अति माने च कौरवाः ।
अति दाने वलिर्व्वद्धः सर्व्वमत्यन्तगर्हितम् ॥ ४८ ॥
वस्त्रहीनस्त्वलङ्कारो घृतहीनञ्च भोजनम् ।
स्तनहीनाच या नारी विद्याहीनञ्च जीवनम् ॥ ४९ ॥
भोज्यं भोजनशक्तिश्च रतिशक्तिर्व्वराः स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसं फलम् ॥ ५० ॥
पुत्रप्रयोजना दारा पुत्रपिण्डं प्रयोजनम् ।
हितप्रयोजनं मित्रं धनं सर्व्वप्रयोजनम् ॥ ५१ ॥
दुर्लभं प्राकृतं वाक्यं दुर्लभः पुत्रपण्डितः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः प्रियः ॥ ५२ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्व्वत्र चन्दनं न वने वने ॥ ५३ ॥
अशोच्या निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ५४ ॥
अविद्यपुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ५५

२

कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्व्वाणो न विनश्यति ॥ ५६ ॥
कष्टाद्वृत्तिः पराधीनाः कष्टो वासो निराश्रयः ।
निर्द्धनो व्यवसायश्च सर्व्वकष्टा दरिद्रता ॥ ५७ ॥
तस्करस्य कुतोधर्म्मो दुर्जनस्य कुतः क्षमा ।
वेश्यानाञ्चकुतः स्नेहः कुतः सत्यञ्चकामिनाम् ॥ ५८ ॥
प्रेषितस्य कुतो मानः कोपनस्य कुतः सुखम् ।
स्त्रीणां कुतः सतीत्वञ्च कुतः प्रीतिः खलस्य च ॥ ५९ ॥
दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ६० ॥
यो ध्रुवाणि परित्याज्य अध्रुवं परिसेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ६१ ॥
शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ६२ ॥
सद्योमांसं नवान्नञ्च बालास्त्री क्षीरभोजनम् ।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट् ॥ ६३ ॥
सिंहादेकं वकादेकं षट् शुनस्त्रीणि गर्द्दभात् ।
वायसात् पञ्च शिक्षेच्च चत्वारि कुक्कुटादपि ॥ ६४ ॥
प्रभूतमल्पकार्य्यम्वा यो नरः कर्त्तुमिच्छति ।
सर्व्वारम्भेण तत्कुर्य्यात् सिंहादेकं प्रकीर्त्तितम् ॥ ६५ ॥
सर्व्वेन्द्रियाणि संयम्य वकवत् पण्डितो जनः ।
कालदेशोपपन्नानि सर्व्वकार्य्याणि साधयेत् ॥ ६६ ॥
बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनोगुणाः ॥ ६७ ॥

अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
सन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ६८ ॥
गूढ़मैथुनधर्म्मञ्च काले काले च संग्रहम् ।
अप्रमादमनालस्यं चतुः शिक्षेत वायसात् ॥ ६९ ॥
युद्धञ्च प्रातरुत्थानं भोजनं सह बन्धुभिः ।
स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ७० ॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ७१ ॥
आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ ७२ ॥
न च विद्यासमो बन्धुर्नच व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहो न च दैवात् परं बलम् ॥ ७३ ॥
समुद्रावरणा भूमिः प्राकारावरणं गृहम् ।
नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥ ७४ ॥
घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्माद्घृतञ्च वह्निञ्च नैकत्र स्थापयेद्बुधः ॥ ७५ ॥
आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ७६ ॥
जीर्णमन्नं प्रशंसीयात् भार्य्याञ्च गतयौवनाम् ।
रणात् प्रत्यागतं शूरं शस्यञ्च गृहमागतम् ॥ ७७ ॥
असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ७८ ॥
अवंशपतितो राजा मूर्खस्य पुत्त्रः पण्डितः ।
अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥ ७९ ॥

ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्द्धनः परिभूयते ॥ ८० ॥
पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनं ॥ ८१ ॥
पादपानां भयं वातात् पद्मानां शिशिराद्भयम् ।
पर्व्वतानां भयं वज्रात् साधूनां दुर्जनाद्भयम् ॥ ८२ ॥
प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ ८३ ॥
मूर्खे नियोज्यमाने तु त्रयोदोषा महीपतेः ।
अयशश्चार्थलाभश्च नरके गमनं तथा ॥ ८४ ॥
बहुभिर्मूर्खसङ्घातैरन्योन्यपशुवृत्तिभिः ।
प्रच्छाद्यन्ते गुणाः सर्व्वे मेघैरिव दिवाकरः ॥ ८५ ॥
यस्य चेत्रं नदीतीरे भार्य्या वापि परप्रिया ।
पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ८६ ॥
असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते ।
शिला तरति पानीयं गीतं गायन्ति वानराः ॥ ८७ ॥
सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणः ।
भार्य्या भर्त्तुप्रिया यस्य तस्य नित्योत्सवं गृहम् ॥ ८८ ॥
हेलास्यात् कार्य्यनाशाय बुद्धिनाशाय निर्द्धनम् ।
याच्ञा च माननाशाय कुलनाशाय कुभोजनं ॥ ८९ ॥
सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात्फलं नास्ति छाया केन निवार्य्यते ॥ ९० ॥
प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ९१ ॥

नदी कूले च ये वृक्षाः परहस्तगतं धनम् ।
कार्य्यं स्त्रीगोचरं यत् स्यात् सर्व्वं तद्विफलम्भवेत् ॥ ९२
कुदेशमासाद्य कुतोऽर्थसञ्चयः,
कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखं,
कुशिष्यमध्यापयतः कुतो यशः ॥ ९३ ॥
कूपोदकं वटच्छाया श्यामा स्त्री इष्टकालयम् ।
शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥ ९४ ॥
विषं चंक्रमणं रात्रौ विषं राज्ञोऽनुकूलता ।
विषं स्त्रियोऽप्यन्यरता विषं व्याधिरवीक्षितः ॥ ९५ ॥
दूरधीता विषं विद्या अजीर्णे भोजनं विषम् ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ ९६ ॥
प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः ।
अल्पवीजं हतं क्षेत्रं भृत्यदोषे हतप्रभुः ॥ ९७ ॥
हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः ।
हता रूपवती बन्ध्या हतं सैन्यमनायकम् ॥ ९८ ॥
वेदवेदाङ्ग तत्त्वज्ञो जपहोमपरायणः ।
आशीर्व्वादवचोयुक्त एव राजपुरोहितः ॥ ९९ ॥
कुलशीलगुणोपेतः सर्व्वधर्म्मपरायणः ।
प्रवीणः प्रेषणाध्यक्षो धर्म्माध्यक्षो विधीयते ॥ १०० ॥
आयुर्व्वेदकृताभ्यासः सर्व्वेषां प्रियदर्शनः ।
आर्य्यशीलगुणोपेत एष वैद्यो विधीयते ॥ १०१ ॥
सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्व्वशास्त्रसमालोकी प्रकृष्टोनामलेखकः ॥ १०२ ॥

समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः ।
शौर्य्यवीर्य्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ १०३ ॥
मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥ १०४ ॥
पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः ।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥ १०५ ॥
इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥ १०६ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १०७ ॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपनके देशे रजकः किं करिष्यति ॥ १०८ ॥
यस्य विज्ञानमात्रेण नृणां प्रज्ञा प्रजायते ।
शतमष्टोत्तरं पद्यं चाणक्येन प्रयुज्यते ॥

---